स यो ह वै श्रद्धेडेति वेदाव ह श्रद्धांॅ रुन्द्धेऽथो यत्किंच श्रद्धया जुह्वत्सर्वंॅ हैव तज्जयति ॥ २० ॥ अशनिरेव प्रथमोऽनुयाजः । ह्रादुनिर्द्वितीय उल्कुषी तृतीयः ॥२१॥ स प्रथममनुयाजमनुमन्त्रयेत । अशन्यमुञ्जहीति यन्द्विष्याद्ध्रादुन्यमुञ्जहीति द्वितीयमुल्कुष्यमुञ्जहीति तृतीयम् ॥ २२ ॥ स य एष क्षिप्रम्म्रियते । अशनिर्हं तमनुयाजो हन्त्यथ यो विस्रवन्निमश्च इव ह्रादुनिर्हं तमनुयाजो हन्त्यथ योऽभ्युष्टमिश्च इवोल्कुषी ह तमनुयाजो हन्ति ॥ २३ ॥ सैषा यज्ञमेनिः । एतया वै मेन्या देवा असुरान्पराभावयाञ्चक्रुस्तथो एवैवंविद्यजमानः पाप्मानन्द्विषन्तम्भ्रातृव्यम्पराभावयति ॥ २४ ॥ स यदनुयाजान्तो यज्ञः स्यात् । अशन्यन्तः स्याद्ध्रादुन्यन्त उल्कुष्यन्तस्तस्माद्वै देवानां यज्ञ इडान्तो वैव शंय्वन्तो वा ॥ २५ ॥ प्रयाजैर्वै देवाः । स्वर्गंलोकमायँस्तानसुरा अन्वाजिगांॅसँस्ताननुयाजैः प्रत्यौहँस्तद्यदनुयाजा इज्यन्ते पाप्मानमेव तद्द्विषन्तम्भ्रातृव्यं यजमानः प्रत्यूहति ॥ २६ ॥ प्राणा वै प्रयाजाः । अपाना अनुयाजास्तस्मात्प्रयाजाः प्राञ्चो हूयन्ते तद्धि प्राणरूपम्प्रत्यञ्चोऽनुयाजास्तदपानरूपमेता ह वै दर्शपूर्णमासयोरुपसदो यदनुयाजास्तस्मात्त उपसद्रूपेण प्रत्यञ्चो हूयन्ते ॥ २७ ॥ सांॅस्था सूक्तवाकः । स यो ह वै सांॅस्था सूक्तवाक इति वेदाव ह सांॅस्थांॅ रुन्द्धेऽयो यत्किञ्च सांॅस्थया जुह्वत्सर्वंॅ हैव तज्जयति गच्छति भूयसः सांॅस्थाम् ॥ २८ ॥

प्रतिष्ठा शँय्योर्वाकः । स यो ह वै प्रतिष्ठा शँय्योर्वाक इति वेदाव ह प्रतिष्ठाꣳ रुन्द्धेऽथो यत्किंच प्रतिष्ठया जय्यꣳ सर्वꣳ हैव तज्जयति गच्छति प्रतिष्ठाम् ॥ २९ ॥ ते देवाः । एतान्पत्नीसँय्याजान्पश्चात्पर्यौहन्त मिथुनमेवैतदुपरिष्टाद्दधत प्रजात्यै तद्यत्पत्नीसंय्याजा इज्यन्ते मिथुनमेवैतदुपरिष्टाद्धत्ते प्रजात्यै देवानाꣳ ह वै प्रजातिमनु प्रजायते मिथुनेन मिथुनेन ह प्रजायते य एवमेतद्वेद ॥ ३० ॥ अन्नꣳ समिष्टयजुः । स यो ह वा अन्नꣳ समिष्टयजुरिति वेदाव हान्नꣳ रुन्द्धेऽथो यत्किंचान्नेन जय्यꣳ सर्वꣳ हैव तज्जयति ॥ ३१ ॥ सँवत्सरो यजमानः । तमृतवो याजयन्ति वसन्त आग्नीध्रस्तस्माद्वसन्ते दावाश्चरन्ति तद्ध्यग्निरूपꣳ ग्रीष्मोऽध्वर्युस्तप्त इव वै ग्रीष्मस्तप्तमिवाध्वर्युर्निष्क्रामति वर्षा उद्गाता तस्माद्यदा बलवद्वर्षति साम्न इवोपब्दिः क्रियते शरद्ब्रह्मा तस्माद्यदा सस्यम्पच्यते ब्रह्मण्यवत्यः प्रजा इत्याहुर्हेमन्तो होता तस्माद्धेमन्वषट्कृताः पशवः सीदन्त्येता ह वा एनन्देवता याजयन्ति स यद्येनमेतापावीरा याजयेयुरेता एव देवता मनसा ध्यायेदेता हैवैनन्देवता याजयन्ति ॥ ३२ ॥ अथ हैषैव तुला । यद्दक्षिणो वेद्यन्तः स यत्साधु करोति तदन्तर्वेद्यथ यदसाधु तद्बहिर्वेदि तस्माद्दक्षिणं वेद्यन्तमधिस्पृश्येवासीत तुलायाꣳ ह वा अमुष्मिँल्लोक आदधति यतरद्यꣳस्यति तदन्वेष्यति यदि साधु वासाधु वेत्यथ य एवं वेदास्मिन्हैव लोके

तुलामारोहन्त्ययमुष्मिँल्लोके तुलाधानम्मुच्यते साधुकृत्या हैवास्य यच्छति न पापकृत्या ॥ ३३ ॥ [ अर्धं प्रपाठकः ५२ ]

द्वितीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥

[ अग्निहोत्रावयवोपासनाप्रकारः ]

वाग्घ वा ऽएतस्याग्निहोत्रस्याग्निहोत्री * । मन ऽएव वत्सस्तदिदम्मनश्च वाक्च समानमेव सन्नानेव तस्मात्समान्या रज्ज्वा वत्सञ्च मातरञ्चाभिदधति तेज ऽएव श्रद्धा सत्यमाज्यम् ॥ १ ॥ तद्धैतज्जनको वैदेहः । याज्ञवल्क्यम्पप्रच्छ वेत्थाग्निहोत्रं याज्ञवल्क्या३ ऽइति वेद सम्राडिति किमिति पय ऽएवेति ॥ २ ॥ यत्पयो न स्यात् । केन जुहुया ऽइति व्रीहियवाभ्यामिति यद्व्रीहियवौ न स्याता-ङ्केन जुहुया ऽइति या ऽअन्या ऽओषधय ऽइति यदन्या ऽओषधयो न स्युः केन जुहुया ऽइति या ऽआरण्या ऽओषधय ऽइति यदारण्या ऽओषधयो न स्युः केन जुहुया ऽइति वानस्पत्येनेति यद्वानस्पत्यन्न स्यात्केन जुहुया ऽइत्यद्भिरिति यदापो न स्युः केन जुहुया ऽइति ॥ ३ ॥ स होवाच । न वा ऽइह तर्हि किञ्चनासीदथैतदहूयतैव सत्यꣳ श्रद्धायामिति वेत्थाग्निहोत्रं याज्ञवल्क्य धेनुशत-न्ददामीति होवाच ॥ ४ ॥ तदप्येते श्लोकाः । किꣳ

* अग्निहोत्रमिति कर्मनामधेयम् । अग्नये होत्र होमोऽस्मिन्निति तद्व्युत्पत्तिः । उपचारात् तदर्थं पयोऽप्यग्निहोत्रम्, तस्य दोग्ध्री धेनुरप्यग्निहोत्रीत्युच्यते ।

स्विद्विद्वान्प्रवसत्यग्निहोत्री गृहेभ्यः कुथथं स्विदस्य काव्यङ्कथः सन्ततो ऽअग्निभिरिति कथथं स्विदस्यानपप्रोषितम्भवतीत्येवैतदाह ॥ ५ ॥ यो जविष्ठो भुवनेषु । स विद्वान्प्रवसन्विदे तथा तदस्य काव्यन्तथा सन्ततो ऽअग्निभिरिति मन ऽएवैतदाह मनसैवास्यानपप्रोषितम्भवतीति ॥ ६ ॥ यत्स दूरम्परेत्य । अथ तत्र प्रमायति कस्मिन्नस्य हुताहुतिर्गृहे यामस्य जुहृतीति यत्स दूरम्परेत्याथ तत्र प्रमायति कस्मिन्नस्य साहुतिर्हुता भवतीत्येवैतदाह ॥ ७ ॥ यो जागार भुवनेषु । विश्वा जातानि योऽविभः तस्मिन्नस्य हुताहुतिर्गृहे यामस्य जुहृतीति प्राणमेवैतदाह तस्मादाहुः प्राण ऽएवाग्निहोत्रमिति ॥ ८ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अग्निहोत्रे मिथुनत्वदर्शनम् ]

यो ह वा ऽअग्निहोत्रे । षण्मिथुनानि वेद मिथुनेन मिथुनेन ह प्रजायते सर्वाभिः प्रजातिभिर्यजमानश्च पत्नी च तदेकम्मिथुनन्तस्मादस्य पत्नीवदग्निहोत्रथं स्यादेतन्मिथुनमुपाप्नवानीति वत्सश्चाग्निहोत्री च तदेकम्मिथुनन्तस्मादस्य पुँवत्साग्निहोत्री स्यादेतन्मिथुनमुपाप्नवानीति स्थाली चाङ्गाराश्च तदेकम्मिथुनथं स्रुक्च स्रुवश्च तदेकम्मिथुनमाहवनीयश्च समिच्च तदेकम्मिथुनमाहुतिश्च स्वाहाकारश्च तदेकम्मिथुनमेतानि ह वा

ऽअग्निहोत्रे पुण्यिमथुनानि तानि य ऽएवं वेद मिथुनेन मिथुनेन ह प्रजायते सर्वाभिः प्रजातिभिः ॥ १ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

---

[ प्रसङ्गतः आख्यायिकया ब्रह्मचारिधर्मप्रतिपादनम् ]

ब्रह्म वै मृत्यवे प्रजाः प्रायच्छत् । तस्मै ब्रह्मचारिणमेव न प्रायच्छत्सोऽब्रवीदस्तु मह्यमप्येतस्मिन्भाग ऽइति यामेव रात्रिः समिधन्नाहराता ऽइति तस्माद्यार्थः रात्रिम्ब्रह्मचारी समिधन्नाहरत्यायुष ऽएव तामवदाय वसति तस्माद्ब्रह्मचारी समिधमाहरेन्नेदायुषोऽवदाय वसानीति ॥ १ ॥ दीर्घसत्रं वा ऽएष ऽउपैति । यो ब्रह्मचर्यमुपैति स यामुपयन्त्समिधमादधाति सा प्रायणीया याथ्ठ स्नास्यन्त्सोदयनीयाथ या ऽअन्तरेण सत्र्या ऽएवास्य ता ब्राह्मणो ब्रह्मचर्य्यमुपयन् ॥ २ ॥ चतुर्द्धा भूतानि प्रविशति । अग्निम्पदा मृत्युम्पदाचार्य्यम्पदात्मन्येवास्य चतुर्थः पादः परिशिष्यते ॥ ३ ॥ स यदग्नये समिधमाहरति । य ऽएवास्याग्नौ पादस्तमेव तेन परिक्रीणाति तः संस्कृत्यात्मन्धत्ते स ऽएनमाविशति ॥ ४ ॥ अथ यदात्मानन्दरद्रीकृत्येव । अह्रीर्भूत्वा भिक्षते य ऽएवास्य मृत्यौ पादस्तमेव तेन परिक्रीणाति तः संस्कृत्यात्मन्धत्ते स ऽएनमाविशति ॥ ५ ॥ अथ यदाचार्य्यवचसङ्करोति । यदाचार्य्याय कर्म्म करोति य ऽएवास्याचार्ये पादस्तमेव तेन परिक्रीणाति तः संस्कृत्यात्मन्धत्ते

स ऽएनमाविशति ॥ ६ ॥ न ह वै स्नात्वा भिक्षेत । अप ह वै स्नात्वा भिक्षाञ्जयत्यप ज्ञातीनामशनायामप पितॄणाᳬंᳬ स ऽएवं विद्वान्यस्या ऽएव भूयिष्ठᳬंᳬ श्लाघेत तांम्भिक्षेतेत्याहुस्तल्लोक्यमिति स यद्यन्याम्भिक्षितव्यान्न विन्देदपि स्वामेवाचार्य्यजायाम्भिक्षेताथो स्वाम्मातरन्नैनᳬः सप्तम्यभिक्षितातीयात्तमेवं विद्वाᳬंᳬसमेवञ्चरन्तᳬः सर्वे वेदा ऽआविशन्ति यथा ह वा ऽअग्निᳬः समिद्धो रोचत ऽएवᳬंᳬ ह वै स स्नात्वा रोचते य ऽएवं विद्वान्ब्रह्मचर्य्यञ्चरति ॥ ७ ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ आख्यायिकया दर्शपूर्णमासयोः सर्वोत्पत्तिहेतुत्वकथनम् ]

उद्दालको हारुणिᳬः । उदीच्च्यान्वृतो धावयाञ्चकार तस्य निष्क ऽउपाहित ऽआसैतद्ध स्म वै . तत्पूर्वेषां वृताᳬनान्धावयतामेकधनमुपाहितम्भवत्युपवल्हाय बिभ्यतान्ताᳬन्होदीच्च्यानाम्ब्राह्मणान्भीर्विवेद ॥ १ ॥ कौरुपाञ्चालो वा ऽअयम्ब्रह्मा ब्रह्मपुत्रᳬः । यद्वै नोऽयमर्द्धन्न पर्य्यादुदीत हन्तैनम्ब्रह्मोद्यमाह्वयामहा ऽइति केन वीरेणेति स्वैदायनेनेति शौनको ह स्वैदायन ऽआस ॥ २ ॥ ते होचुᳬः । स्वैदायन त्वया वीरेणेमम्प्रतिसंयतामहा ऽइति स होवाचोपाङ्ग खलु रमताहन्त्वेनं वेदानीति तᳬᳬ हाभिप्रपेदे तᳬᳬ हाभिᳬप्रपन्नमभ्युवाद स्वैदायना३ ऽइति हो३ गौतमस्य पुत्रे-

तीतरः प्रतिशुश्राव तद्ध ह तत एव प्रष्टुन्दध्रे ॥ ३ ॥
स वै गौतमस्य पुत्र ब्रूतो जनन्धावयेत् । यो दर्शपूर्ण-
मासयोरष्टौ पुरस्तादाज्यभागान्विद्यात्पञ्च मध्यतो हवि-
र्भागान्षट् प्राजापत्यानष्टा उउपरिष्टादाज्यभागान् ॥ ४ ॥
स वै गौतमस्य पुत्र ब्रूतो जनन्धावयेत् । यस्तद्दर्शपूर्ण-
मासयोर्विद्याद्यस्मादिमाः प्रजा ऽअदन्तका जायन्ते
यस्मादासाञ्जायन्ते यस्मादासाम्प्रभिद्यन्ते यस्मादासाꣳ
सन्तिष्ठन्ते यस्मादासाम्पुनरुत्तमे वयसि सर्व ऽएव
प्रभिद्यन्ते यस्मादधर ऽएवाग्रे जायन्तेऽथोत्तरे यस्मादु-
णीयाꣳस ऽएवाधरे प्रथीयाꣳस ऽउत्तरे यस्माद्दꣳष्ट्रा
वर्षीयाꣳसो यस्मात्समा ऽएव जम्भ्याः ॥ ५ ॥ स वै
गौतमस्य पुत्र ब्रूतो जनन्धावयेत् । यस्तद्दर्शपूर्णमासयो-
र्विद्याद्यस्मादिमाः प्रजा लोमशा जायन्ते यस्मादासा-
म्पुनरिव श्मश्रूण्यौपपक्ष्याणि दुर्व्वीरिणानि जायन्ते
यस्माच्छीर्षण्येवाग्रे पलितो भवत्यथ पुनरुत्तमे वयसि
सर्व ऽएव पलितो भवति ॥ ६ ॥ स वै गौतमस्य पुत्र
ब्रूतो जनन्धावयेत् । यस्तद्दर्शपूर्णमासयोर्विद्याद्यस्मा-
त्कुमारस्य रेतः सिक्तन्न सम्भवति यस्मादस्य मध्यमे
वयसि सम्भवति यस्मादस्य पुनरुत्तमे वयसि न सम्भ-
वति ॥ ७ ॥ यो गायत्रीꣳ हरिणीम् । ज्योतिष्पक्षां
यजमानꣳ स्वर्गँल्लोकमभिवहन्तीं विद्यादिति तस्मै ह
निष्कम्प्रददावनूचानः स्वैदायनासि सुवर्णं वाव सुवर्ण-
विदे ददतीति तद्ध होपगुह्य निश्चक्राम तद्ध ह पप्रच्छुः

किमिवैष गौतमस्य पुत्रोऽभूदिति ॥ ८ ॥ स होवाच । यथा ब्रह्मा ब्रह्मपुत्रो मूर्द्धास्य विपतेद्य ऽएनमुपवल्हेतेति ते ह तत ऽएव विप्रेयुस्तद्ध ह तत ऽएव समित्पाणिः प्रतिचक्रम ऽउप त्वायानीति किमध्येष्यमाण ऽइति यानेव मा प्रश्नानप्राक्षीस्तानेव मे विब्रूहीति स होवाचानुपेतायैव त ऽएनान्ब्रवाणीति ॥ ९ ॥ तस्मा ऽउ हैतदुवाच । द्वावाघारौ पञ्च प्रयाजा ऽआग्नेय ऽआज्यभागोऽष्टम ऽएतेऽष्टौ पुरस्तदाज्यभागाः सौम्य ऽआज्यभागो हविर्भागाणाम्प्रथमो हविर्हि सोम ऽआग्नेयः पुरोडाशोऽग्नीषोमीय ऽउपांशुयाजो[1]ऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदेते पञ्च मध्यतो हविर्भागाः ॥१०॥ प्राशित्र[2]मिडा च । यच्चाग्नीध ऽआदधाति ब्रह्मभागो यजमानभागोऽन्वाहार्य्य ऽएते षट् प्राजापत्यास्त्रयोऽनुयाजाश्चत्वारः पत्नीसँय्याजाः† समिष्टयजुरष्टममेतेऽष्टा ऽउपरिष्टादाज्यभागाः ॥ ११ ॥ अथ यदपुरोऽनुवाक्यकाः प्रयाजा भवन्ति । तस्मादिमाः प्रजा ऽअदन्तका जायन्तेऽथ यत्पुरोऽनुवाक्यवन्ति हवीꣳषि भवन्ति तस्मादासाञ्जायन्तेऽथ यदपुरोऽनुवाक्यका ऽअनुयाजा भवन्ति तस्मादासाम्प्रभिद्यन्तेऽथ यत्पुरोऽनुवाक्यवन्तः पत्नीसँय्याजा भवन्ति तस्मादासाꣳ सन्तिष्ठन्तेऽथ यदपुरोऽनुवाक्यकः

(१) उपांशु इज्यते इति उपांशुयाजः । एवमुपांशुजपश्च "जिह्वोष्ठौ चालयेत् किञ्चिद् देवतागतमानसः । निजश्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः ॥" इति स्मृत्युक्त

(२) प्राशित्रं ब्रह्मणो भागः ।

† पत्नीदेवताका दर्शपूर्णमासाङ्गभूताश्चत्वारो यागविशेषाः पत्नीसंयाजाः ।

समिष्टयजुर्भवति तस्मादासाम्पुनरुत्तमे व्वयसि सर्व्वं ऽएव प्प्रभिद्यन्ते ॥ १२ ॥ * अथ यदनुवाक्क्यामनूच्य । याज्ज्यया यजति तस्मादुधर ऽएवाग्ग्रे जायन्तेऽथोत्तरेऽथ यद्गायत्रीमनूच्य त्रिष्टुभा यजति तस्मादणीयाꣳस ऽएवाधरे प्प्रथीयाꣳस ऽउत्तरेऽथ यत्प्राश्रावाघारावाघारयति तस्माद्दꣳष्ट्रा व्वर्षीयाꣳसोऽथ यत्तच्छन्दसावेव सꣳस्थाज्ज्ये भवतस्तस्मात्समा ऽएव जम्भ्याः ॥ १३ ॥ अथ यद्बर्हिस्स्तृणाति । तस्मादिमाः प्प्रजा लोमशा जायन्तेऽथ यत्पुनरिव प्प्रस्तरꣳ[A] स्तृणाति तस्मादासाम्पुनरिव श्मश्रूण्युपपक्क्ष्याणि दुर्व्वारिणानि जायन्तेऽथ यत्केवलमेवाग्ग्रे प्प्रस्तरमनुप्प्रहरति तस्माच्छीर्षण्ण्येवाग्ग्रे पलितो भवत्त्यथ यत्सर्व्वमेव बर्हिरनुप्प्रहरति तस्मात्पुनरुत्तमे व्वयसि सर्व्व ऽएव पलितो भवति ॥ १४ ॥ अथ यदाज्ज्यहविषः प्प्रयाजा भवन्ति । तस्मात्कुमारस्य रेतः सिक्तꣳ सम्भवत्युदकमिवैव भवत्युदकमिव ह्याज्ज्यमथ यन्मद्ध्ये यज्ञस्य दद्ध्ना पुरोडाशेनेति चरन्ति तस्मादस्य मद्ध्यमे व्वयसि सम्भवति द्रप्प्सीवैव भवति द्रप्प्सीव हि रेतोऽथ यदाज्ज्यहविष ऽएवानुयाजा भवन्ति तस्मादस्य पुनरुत्तमे व्वयसि न सम्भवत्युदकमिवैव भवत्युदकमिव ह्याज्ज्यम् ॥ १५ ॥ व्वेदिरेव गायत्री । तस्यै येऽष्टौ पुरस्तादाज्ज्यभागाः स दक्षिणः पक्षो येऽष्टा ऽउपरिष्टादाज्ज्यभागाः स

---

* शतम् ५७०० ।
(A) प्रस्तर वृश्चमुष्टिः ।

ऽउत्तरः पक्षः सैषा गायत्री हरिणी ज्योतिष्पक्षा यजमानᳪं स्वर्गँल्लोकमभिवहति य ऽएवमेतद्वेद ॥ १६ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ स्रुगादानप्रकारः ]

अथातः स्रुचोरादानस्य । तद्धैतदेके कुशला मन्यमाना दक्षिणेनैव जुहूमाददते सव्येनोपभृतन्न तथा कुर्याद्यो हैनन्तत्र ब्रूयात्प्रतिप्रतिन्न्वा ऽअयमध्वर्युर्यजमानस्य द्विषन्तम्भ्रातृव्यमकरप्रत्युद्यामिनमितीश्वरो ह तथैव स्यात् ॥ १ ॥ इत्थमेव कुर्यात् । उभाभ्यामेव पाणिभ्याञ्जुहूम्परिगृह्योपभृत्यधिनिदध्यात्तस्य नोपमीमाᳪंसास्ति तत्पशव्यमायुष्यन्ते ऽअसᳪंशिञ्जयन्नाददीत ते * यत्सᳪंशिञ्जयेदयोगक्षेमो यजमानमृच्छेत्तस्मादसᳪंशिञ्जयन्नाददीत ॥ २ ॥ अथातोऽतिक्रमणस्य । वज्रेण ह वा ऽअग्नयोऽध्वर्युर्यजमानस्य पशून्विधमति वज्रेण हास्मा ऽअग्नय ऽउपसमूहत्येष ह वा ऽअध्वर्युर्वज्रेण यजमानस्य पशून्विधमति य ऽआश्रावयिष्यन्दक्षिणेनातिक्रामति सव्येनाश्राव्याथ हास्मा ऽएष ऽउपसमूहति य ऽआश्रावयिष्यन्त्सव्येनातिक्रामति दक्षिणेनाश्राव्यैष हास्मा ऽउपसमूहति ॥ ३ ॥ अथातो धारणस्य । तद्धैतदेके कुशला मन्यमानाः प्रगृह्य बाहू स्रुचौ धारयन्ति न तथा कुर्याद्यो हैनन्तत्र ब्रूयाच्छूलौ न्वा ऽअयमध्व-

* 'ग' 'ज' पुस्तकयो 'ते' इति नास्ति ।

र्युर्बाहू ऽअकृत शूलबाहुर्भविष्यतीतीश्वरो ह तथैव स्यादथ हैष मध्यमः प्राणस्तस्मादु तमुपन्यच्येवैव धारयेत् * ॥ ४ ॥ अथात ऽआश्रावणस्य । षड्ढ वा ऽआश्रावितानि न्यक्तिर्यगूर्द्ध्वङ्कृपणम्बहिःश्रयन्तःश्रि ॥ ५ ॥ एतद्ध वै न्यक् । योऽयमुच्चैरादाय शनैर्निदधाति स यमिच्छेत्पापीयान्स्यादिति तस्योच्चैरादाय शनैर्निदध्यात्तेन स पापीयान्भवति ॥ ६ ॥ अथ हैतत्तिर्यक् । योऽयं यावतैवादत्ते तावता निदधाति स यमिच्छेन्नैव श्रेयान्स्यान्न पापीयानिति तस्य यावतैवाददीत तावता निदध्यात्तेन स नैव श्रेयान्न पापीयान्भवति ॥ ७ ॥ अथ हैतदूर्द्ध्वम् । योऽयꣳ शनैरादायोच्चैर्निदधाति स यमिच्छेच्छ्रेयान्स्यादिति तस्य शनैरादायोच्चैर्निदध्यात्तेन स श्रेयान्भवति ॥ ८ ॥ अथ हैतत्कृपणम् । योऽयमणु दीर्घमस्वरमाश्रावयति यो हैनन्तत्र ब्रूयात्कृपणन्वा ऽअयमध्वर्युर्यजमानमकद्धिपतो भ्रातृव्यस्योपावसायिनमितीश्वरो ह तथैव स्यात् ॥ ९ ॥ अथ हैतद्बहिःश्रि । योऽयमपव्यादायौष्ठा ऽउच्चैरस्वरमाश्रावयति श्रीर्वै स्वरो बाहत ऽएव तच्छ्रियन्धत्तेऽशनायुको भवति ॥ १० ॥ अथ हैतदन्तःश्रि । योऽयꣳ सन्धायौष्ठा ऽउच्चैः स्वरवदाश्रावयति श्रीर्वै स्वरोऽन्तरत ऽएव तच्छ्रियन्धत्तेऽन्नादो भवति ॥ ११ ॥ स वै मन्द्रमिवोरसि । परास्तब्भ्योभयतो चार्हतमुच्चैरन्ततो निदध्यात्तस्य नोपमीमाꣳ-

* तथा चोक्तं सूत्रकृता "नाभिदेशे धारणम्" ( का० श्रौ० सू० २ २. १ )।

सास्ति तत्पशव्यमायुष्यम् ॥ १२ ॥ अथातो होमस्य । तद्धैतदेके कुशला मन्यमानाः प्राचीᳬ स्रुचमुपावहृत्य हुत्वा पर्य्याहृत्योपभृत्यधिनिदधति न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयादनुषुवन्वा ऽअयमध्वर्युर्यजमानमकर्द्वि- षतो भ्रातृव्यस्यान्ववसायिनमितीश्वरो ह तथैव स्यात् ॥ १३ ॥ पार्श्वतु ऽउ हैके । स्रुचमुपावहृत्य हुत्वा पर्य्याहृत्योपभृत्यधिनिदधति न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयादुतीर्थेन न्वा ऽअयमध्वर्युराहुतीः प्रारौत्सीदलं म्रा शरिष्यते घुणिर्वा भविष्यतीतीश्वरो ह तथैव स्यात् ॥ १४ ॥ इत्थमेव कुर्य्यात् । प्राचीमेव स्रुचमुपावहृत्य हुत्वा तेनैवाधिहृत्योपभृत्यधिनिदध्यात्तस्य नोपमीमाᳬ- सास्ति तत्पशव्यमायुष्यम् ॥ १५ ॥ प्रदग्धाहुतिर्ह वा ऽअन्योऽध्वर्युः । आहुतीर्हान्यः सन्तर्प्पयत्येष ह वै प्रदग्धाहुतिरध्वर्युर्योऽयमाज्यः हुत्वावदानानि जुहो- त्येतद् ह वै तदुदृश्यमाना वागभ्युवाद प्रदग्धाहुतिर्वा ऽअयमध्वर्युरित्यथ हैना ऽएष सन्तर्प्पयति योऽयमाज्यः हुत्वावदानानि जुहोत्यथ पुनरन्तत ऽआज्येनाभिजुहोत्येष हैनाः सन्तर्प्पयति तासाᳬ सन्तृप्तानान्देवा हिरण्मयाँश्च- मसान्पूरयन्ते ॥ १६ ॥ तदु होवाच याज्ञवल्क्यः । यद्वा ऽउपस्तीर्य्यावदायाभिघारयति तदेवैनाः सन्तर्प्पयति तासाᳬ सन्तृप्तानान्देवा हिरण्मयाँश्चमसान्पूरयन्तेऽय- स्थूणगृहपतीनाᳬ ह वै शौल्बायनोऽध्वर्य्युरास॥ १७ ॥ स

(१) "ना वै" इति 'ग' 'ज' पुस्तकयोः पाठ ।

होवाच । इदमहेदुः सत्रङ्क्रुशपस्त्वल्पाज्यमथायङ्गृह-
पतिरस्मीति मन्यत ऽइति ॥ १८ ॥ स होवाच ।
अद्ध्वर्य्यवा वै नोऽवक्रक्ष ऽएते वै ते स्रुचौ ये त्वद्धः सँवत्स-
रन्नाशक ऽआदातुं य्यद्वै त्वाहमेतयोरनुशिष्याम्प्र प्रजया
पशुभिर्ज्जायेथा ऽअभि स्वर्गँल्लोकं वहेरिति ॥ १९ ॥ स
होवाच । उप त्वयानीति स होवाचात्र वाव खल्ल्वर्हसि
यो नः सँवत्सरेऽद्ध्वर्य्युरभूरनुपेतायैव त ऽएनेद्ब्रवाणीति
तस्मा ऽउ हैतदेव स्रुचोरादानमुवाच यदेतद्व्याख्याम
तस्मादेवंविदमेवाद्ध्वर्य्युङ्कुर्वीत नानेवंविदम् ॥ २० ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या १०४ ॥



[ मित्रविन्देष्टिः ]

प्रजापतिर्वै प्रजाः सृजमानोऽतप्यत । तस्माच्छ्रा-
न्तात्तेपानाच्छ्रीरुदक्रामत्सा दीप्यमाना भ्राजमाना
लेलायन्त्यतिष्ठत्तान्दीप्यमानाम्भ्राजमानाँल्लेलायन्तीन्देवा
ऽअभ्यध्यायन् ॥ १ ॥ ते प्रजापतिमब्रुवन् । हनामेमा-
मेदमस्या ददामहा ऽइति स होवाच स्त्री वा ऽएषा
यत्श्रीर्न वै स्त्रियङ्घ्नन्त्युत त्वा ऽअस्या जीवन्त्या ऽएवा-
ददत ऽइति ॥ २ ॥ तस्या ऽअग्निरन्नाद्यमादत्त । सोमो
राज्यं वरुणः साम्राज्यम्मित्रः क्षत्रमिन्द्रो बलम्बृहस्पति-

(१) 'ग' 'ज' पुस्तकयो 'यत्ध०' इति पाठ उपलभ्यते ।

ब्रह्मवर्चसꣳ सविता राष्ट्रम्पूषा भगꣳ सरस्वती पुष्टिन्त्वष्टा रूपाणि ॥ ३ ॥ सा प्रजापतिमब्रवीत् । आ वै म ऽइदमदिषतेति स होवाच यज्ञेनैनाꣳपुनर्या-चस्वेति ॥ ४ ॥ सैतान्दशहविषमिष्टिमपश्यत् । आग्ने-यमष्टाकपालम्पुरोडाशꣳ सौम्यञ्चरुं वारुणन्दशकपालम्पु-रोडाशम्मैत्रञ्चरुमैन्द्रमेकादशकपालम्पुरोडाशम्बार्हस्पत्यञ्चरुꣳ सावित्रन्द्वादशकपालं वाष्टाकपालं वा पुरोडाशम्पौष्णञ्चरुꣳ सारस्वतञ्चरुन्त्वाष्ट्रन्दशकपालम्पुरोडाशम् * ॥ ५ ॥ ताने-तयानुवाक्ययाऽभ्यवदत् । अग्निꣳ सोमो वरुणो मित्र ऽइन्द्रो बृहस्पतिꣳ सविता यꣳ सहस्री ॥ पूषा नो गोभिरवसा सरस्वती त्वष्टा रूपाणि समनक्तु यज्ञैरिति ते प्रत्युपा-तिष्ठन्त ॥ ६ ॥ तानेतया याज्यया । परस्तात्प्रतिलोम-म्प्रत्यैत्त्वष्टा रूपाणि ददती सरस्वती पूषा भगꣳ सविता मे ददातु ॥ बृहस्पतिर्ददिन्द्रो बलम्मे मित्रꣳ क्षत्रं वरुणꣳ सोमो ऽअग्निरिति ते पुनर्दानायाद्रियन्त ॥ ७ ॥ सैतानु-पहोमानपश्यत् । अग्निरन्नादोऽन्नपतिरन्नाद्यमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादायाग्निरुदक्रामत्पुनरस्या ऽअन्नाद्यमददात् ॥ ८ ॥ सोमो राजा राजपतिꣳ । राज्य-मस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय सोम ऽउदक्रामत्पुनरस्यै राज्यमददात् ॥ ९ ॥ वरुणꣳ स-म्राट् सम्राट्पतिꣳ साम्राज्यमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय वरुण ऽउदक्रामत्पुनरस्यै साम्रा-

* का॰ श्रौ॰ सू॰ अ॰ ५ क॰ १२ सू॰ ३ ।

ज्यमददात् ॥ १० ॥ मित्रः क्षत्रं क्षत्रपतिः । क्षत्रमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय मित्र ऽउदक्रामत्पुनरस्यै क्षत्रमददात् ॥ ११ ॥ इन्द्रो बलम्बलपतिः । बलमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादायेन्द्र ऽउदक्रामत्पुनरस्यै बलमददात् ॥ १२ ॥ बृहस्पतिर्ब्रह्म ब्रह्मपतिः । ब्रह्मवर्चसमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय बृहस्पतिरुदक्रामत्पुनरस्यै ब्रह्मवर्चसमददात् ॥ १३ ॥ सविता राष्ट्रं राष्ट्रपतिः । राष्ट्रमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय सवितोदक्रामत्पुनरस्यै राष्ट्रमददात् ॥ १४ ॥ पूषा भगम्भगपतिः । भगमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय पूषोदक्रामत्पुनरस्यै भगमददात् ॥ १५ ॥ सरस्वती पुष्टिम्पुष्टिपतिः । पुष्टिमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय सरस्वत्युदक्रामत्पुनरस्यै पुष्टिमददात् ॥ १६ ॥ त्वष्टा रूपाणाᳬं रूपकृद्रूपपतिः । रूपेण पशूनस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय त्वष्टोदक्रामत्पुनरस्यै रूपेण पशूनददात् ॥ १७ ॥ ता वा ऽएताः । दश देवता दश हवीᳬंषि दशाहुतयो दश दक्षिणा दशाक्षरा विराट् श्रीर्विराट् श्रियामेवैतद्विराज्यन्नाद्ये प्रतितिष्ठति ॥ १८ ॥ तस्यै पञ्चदश सामिधेन्यो भवन्ति । उपाᳬंशु देवता यजति पञ्च प्रयाजा भवन्ति त्रयोऽनुयाजा ऽएकः समि-

(१) का० श्रौ० सू० ५. १२. १। (२) का० श्रौ० सू० ५. १२. १। (३) का० श्रौ० सू० ५. १२. ४।

ष्टयजुः * पुष्टिमन्तावाज्यभागा'वग्निना रयिमश्नवत्पो-
षमेव दिवे दिवे। यशसं वीरवत्तमम्'॥ 'गयस्फानो ऽअमीवहा
वसुवित्पुष्टिवर्द्धनः। सुमित्रः सोम नो भवे'ति सहस्र-
वत्यौ सँय्याज्ये 'नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु
द्युमदग्ने सुवीर्य्यं वर्षिष्ठमनुपक्षितम्' ॥ 'उत नो ब्रह्म-
न्नविष ऽउक्थेषु देवहूतमः। शन्नः शोचा मरुद्वृधोऽग्ने
सहस्रसातम' ऽइति ॥ १९ ॥ ताᳬं हैताङ्गोतमो राहू-
गणः'। विदाञ्चकार सा ह जनकं वैदेहम्प्रत्युत्ससाद ताᳬं
हाङ्गजिद्ब्राह्मणेष्वन्विवेष तामु ह याज्ञवल्क्ये विवेद स
होवाच सहस्रम्भो याज्ञवल्क्य दद्मो यस्मिन्वयन्त्वयि
मित्रविन्दामन्वविदामेति विन्दते मित्रᳬं राष्ट्रमस्य भव-
त्यप पुनर्म्मृत्युञ्जयति सर्वमायुरेति य ऽएवं विद्वानेतयेष्ट्या
यजते यो वै तदेवं वेद ॥ २० ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ २ ॥

[ हविषः समृद्धिः ]

अथातो हविषः समृद्धिः। षड्ढ वै ब्रह्मणो द्वारोऽ-
ग्निर्व्वायुरापश्चन्द्रमा विद्युदादित्यः ॥ १ ॥ स य
ऽउपदग्धेन हविषा यजते। अग्निना ह स ब्रह्मणो
द्वारेण प्प्रतिपद्यते सोऽग्निना ब्रह्मणो द्वारेण प्प्रतिपद्य
ब्रह्मणः सायुज्यᳬं सलोकताञ्जयति ॥ २ ॥ अथ यो

* प्रयानयागादौ सम्यग् इष्टा देवता इज्यन्ते अनेन स होम मन्त्रश्च समिष्टयजु ।

( १ ) ऋ० सं० ९. १ ११। ( २ ) ऋ० सं० १. ६. २१। (३) ऋ० सं० ३. १. १२।
( ४ ) ऋ० सं० ३ १ ११।

शिपतितेन हविषा यजते । वायुना ह स ब्रह्मणो द्वारेण प्रतिपद्यते स वायुना ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति ॥ ३ ॥ अथ योऽश्रृतेन हविषा यजते । अग्निर्ह स ब्रह्मणो द्वारेण प्रतिपद्यते सोऽग्निर्ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति ॥ ४ ॥ अथ य ऽउपरक्तेन हविषा यजते । चन्द्रमसा ह स ब्रह्मणो द्वारेण प्रतिपद्यते स चन्द्रमसा ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति ॥ ५ ॥ अथ यो लोहितेन हविषा यजते । विद्युता ह स ब्रह्मणो द्वारेण प्रतिपद्यते स विद्युता ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति ॥ ६ ॥ अथ यः सुश्रृतेन हविषा यजते । आदित्येन ह स ब्रह्मणो द्वारेण प्रतिपद्यते स ऽआदित्येन ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति सैषा हविषः समृद्धिः स यो हैवमेताꣳ हविषः समृद्धिं वेद सर्वसमृद्धेन हैवास्य हविषेष्टम्भवति ॥ ७ ॥ अथातो यज्ञस्य समृद्धिः । यद्वै यज्ञस्य न्यूनम्प्रजननमस्य तदुथ

भूदिति श्रियै म ऽएतद्वा मा श्रीस्तेजसा यशसा ब्रह्मवर्चसेन परिवृता गमिष्यतीत्येव तदुपासीत ॥ ११ ॥ अथ यदि मन्येत । सम्पन्नम्मे यज्ञेऽभूदिति स्वर्ग्यम्म ऽएतत्स्वर्गलोको भविष्यामीत्येव तदुपासीत सैषा यज्ञस्य समृद्धिः स यो हैवमेतां यज्ञस्य समृद्धिं वेद सर्वसमृद्धेन हैवास्य यज्ञेनेष्टम्भवति ॥ १२ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

---

[ अरण्योरश्वत्थविकृतित्वविधानमाख्यायिकया ]

उर्वशी हाप्सराः । पुरूरवसमैडञ्चकमे तꣳ ह विन्दमानोवाच त्रिः स्म माह्नो वैतसेन * दण्डेन हतादकामाꣳ स्म मा निपद्यासै मो स्म त्वा नग्नन्दर्शमेव वै न स्त्रीणामुपचार ऽइति ॥ १ ॥ सा हास्मिञ्ज्योगुवास । अपि हास्माद्गर्भिण्यास तावञ्ज्योग्घास्मिन्नुवास ततो ह गन्धर्वाः समूदिरे ज्योग्वा ऽइयमुर्वशी मनुष्येष्ववात्सीदुपजानीत यथेयम्पुनरागच्छेदिति तस्यै हाविर्द्व्युरणा शयन ऽउपबद्धास ततो ह गन्धर्वा ऽअन्यतरमुरणम्प्रमेथुः ॥ २ ॥ सा होवाच । अवीर ऽइव बत मेऽजन ऽइव पुत्रꣳ हरन्तीति द्वितीयम्प्रमेथुः सा ह तथैवोवाच ॥ ३ ॥ अथ हायमीक्षाञ्चक्रे । कथन्नु तद-

---

* वैतस इति पुंप्रजननस्य नाम। तथाहि 'शेपो वैतस इति पुंस्प्रजननस्य" वैतसो वितस्त भवति, ( निरु० अ० ३ पा० ४ ख० २१ )।

वीरङ्कथमजनꣳ स्यायत्राहꣳ स्यामिति स नग्न ऽएवानूत्पपात चिरन्तन्मेने यद्वासः पर्य्यधास्यत ततो ह गन्धर्वा विद्युतञ्जनयाञ्चक्रुस्तं ऽयथा दिवैवन्नग्नन्ददर्श ततो हैवेयन्तिरोबभूव पुनरैमीत्येत्तिरोभूताꣳ स ऽआद्ध्या जल्प-न्कुरुक्षेत्रꣳ समया चचारान्यतः प्लक्षेति बिसवती तस्यै हाध्यन्तेन वब्राज तद्ध ता ऽअप्सरस ऽआतयो भूत्वा परिपुप्लुविरे ॥ ४ ॥ तꣳ हेयं ज्ञात्वोवाच । अयं वै स मनुष्यो यस्मिन्नहमवात्समिति ता होचुस्तस्मै वा ऽआविरसामेति तथेति तस्मै हाविरासुः ॥ ५ ॥ ताꣳ हायं ज्ञात्वाभिपरोवाद । 'हये जाये मनसा तिष्ठ घोरे वचाꣳसि मिश्रा कृणवावहै नु ॥ न नौ मन्त्रा ऽअनु-दितास ऽएते मयस्करन्परतरे चनाहन्नि'त्युप नु रम संनु वदावहा ऽइति हैवैनान्तदुवाच ॥ ६ ॥ तꣳ हेतरा प्र-त्युवाच । 'किमेता वाचा कृणवा तवाहम्प्राक्रमिंषमुष-सामग्रियेव ॥ पुरूरवः पुनरस्तम्परेहि दुरापना वात ऽइवा-हमस्मी'ति न वै त्वन्तदकरोर्य्यदहमब्रवन्दुरापा वा ऽअहन्त्वयैतर्ह्यस्मि पुनर्गृहानिहीति हैवैनन्तदुवाच ॥ ७ ॥ अथ हायम्परिद्यून ऽउवाच । 'सुदेवो ऽअद्य प्रपतेदना-वृत्परावतम्परमाङ्गन्तवा ऽउ ॥ 'अधा शयीत निर्ऋतेरु-पस्थेऽधैनं वृका रभसासो ऽअद्यु'रिति सुदेवोऽद्योद्वा बद्ध्नीत प्रवा पतेत्तदेनं वृका वा श्वानो वाद्युरिति हैव तदुवाच ॥ ८ ॥ तꣳ हेतरा प्रत्युवाच । 'पुरूरवो

(१) ऋ० सं० अष्ट० ८ अ० ५ व० १। (२) ऋ० सं० अष्ट० ८ अ० ५ व० १। (३) ऋ० सं० अष्ट० ८ अ० ५ वर्ग २। (४) ऋ० सं० अष्ट० ८ अ० ५ वर्ग २।

मा मृथा मा प्रपप्तो मा त्वा वृकासो ऽअशिवास ऽउ-
क्षन् ॥ न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणाᳬं
हृदयान्येते'ति मैतदादृथा न वै स्त्रैणः सख्यमस्ति पुनर्गृहा-
निहीति हैवैनन्तदुवाच ॥ ९ ॥ 'यद्विरूपाचरम् । मर्त्येष्ववसः रात्रीः शरदश्चतस्रः ॥ घृतस्य स्तोकः सकृदह्न
ऽआश्नान्तादेवेदन्तातृपाणा चरामी'ति तदेतदुक्तप्रत्यु-
क्तम्पञ्चदशर्चं बह्वृचाः प्राहुस्तस्यै ह हृदयमाव्ययां-
चकार ॥ १० ॥ सा होवाच । सँवत्सरतमीᳬं रात्रिमा-
गच्छतात्तन्म ऽएकाᳬं रात्रिमन्ते शयितासे जात ऽउ ते-
ऽयन्तर्हि पुत्रो भवितेति स ह सँवत्सरतमीᳬं रात्रिमाज-
गामेद्धिरण्यविमितानि ततो हैनमेकमूचुरेतत्प्रपद्यस्वेति
तद्वास्मै तामुपप्रजिग्युः ॥ ११ ॥ सा होवाच । गन्धर्वा
वै-ते प्रातर्वरन्दातारस्तं वृणासा ऽइति तं वै मे त्वमेव
वृणीष्वेति युष्माकमेवैकोऽसानीति ब्रूतादिति तस्मै
ह प्रातर्गन्धर्वा वरन्ददुः स होवाच युष्माकमेवैकोऽ-
सानीति ॥ १२ ॥ ते होचुः । न वै सा मनुष्येष्वग्ने-
र्यज्ञिया तनूरस्ति ययेष्ट्वास्माकमेकः स्यादिति तस्मै
ह स्थाल्यामोप्याग्निम्प्रददुरनेनेष्ट्वास्माकमेको भवि-
ष्यसीति तञ्च ह कुमारञ्चादायावव्राज सोऽरण्य ऽएवा-
ग्निन्निधाय कुमारेणैव ग्राममेयाय पुनरैमीत्येत्तिरोभूतं
त्योऽग्निरश्वत्थन्तं त्या स्थाली शमीन्ताᳬं स ह पुन-
र्गन्धर्वानेयाय ॥ १३ ॥ ते होचुः । सँवत्सरञ्चातुष्प्राश्य-

(१) ऋ॰ सं॰ अष्ट॰ ८ अ॰ ५ वर्ग ४ ।

मोदनम्पच स एतस्यैवाऽश्वत्थस्य ' तिस्रस्तिस्रः समिधो घृतेनाऽन्वज्य समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्याधत्तात्स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ' ॥ १४ ॥ ते होचुः । परोऽक्षमिव वा ऽएतद्याऽश्वत्थीमेवोत्तरारणिङ्कुरुष्व शमीमयीमधरारणिः ' स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ॥ १५ ॥ ते होचुः । परोऽक्षमिव वा ऽएतद्याऽश्वत्थीमेवोत्तरारणिङ्कुरुष्वाऽश्वत्थीमधरारणिः स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ॥१६॥ स ऽआश्वत्थीमेवोत्तरारणिश्चक्रे । आश्वत्थीमधरारणिः स यस्ततोऽग्निर्जज्ञे स ऽएव स ऽआस तेनेष्ट्वा गन्धर्वाणामेक ऽआस । तस्मादाश्वत्थीमेवोत्तरारणिङ्कुर्वीताश्वत्थीमधरारणिः स यस्ततोऽग्निर्जायते स ऽएव स भवति तेनेष्ट्वा ' गन्धर्वाणामेको भवति ॥ १७ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ चातुर्मास्ययाजिनो द्वैविध्यं दर्शयितुं तत्रत्यैर्यागैः शरीरावयवकल्पनम् ]

प्रजापतिर्ह चातुर्मास्यैरात्मानं विदधे । स ऽइममेव दक्षिणम्बाहुं वैश्वदेवः हविरकुरुत तस्यायमेवाङ्गुष्ठ ऽआग्नेयः हविरिदः सौम्यमिदः सावित्रम् ॥ १ ॥ स वै वर्षिष्ठः पुरोडाशो भवति । तस्मादियमासां वर्षिष्ठेदः सारस्वतमिदम्पौष्णमथ ' य ऽएष ऽउपरिष्टाद्धस्तस्य सन्धिस्तन्मारुतमिदं वैश्वदेवन्दोर्यावापृथिवीयन्तद्वा

"अश्वत्थशमीगर्भारणी प्रयच्छति" ( का० श्रौ० सू० ४ ७ २० )

ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ २ ॥ अयमेव दक्षिण ऽऊरुर्वरुणप्रघासाः । तस्य यानि पञ्च हवीꣳषि समायीनि * ता ऽइमाः पञ्चाङ्गुलयः कुल्फावेवैन्द्राग्नः हविस्तद्वै द्विदेवत्यम्भवति तस्मादिमौ द्वौ कुल्फाविदं वारुणमिदम्मारुतमनूकङ्कायस्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ ३ ॥ मुखमेवास्यानीकवतीष्टिः । मुखꣳ हि प्राणानामनीकमुरः सान्तपनीयोरसा हि समिव तप्यत ऽउदरङ्गृहमेधीया प्रतिष्ठा वा ऽउदरम्प्रतिष्ठित्यां ऽएव शिश्नान्न्येवास्य क्रैडिनꣳ हविः शिश्नैर्हि क्रीडतीवायमेवावाङ् प्राण ऽआदित्येष्टिः ॥ ४ ॥ अयमेवोत्तर ऽऊरुर्महाहविः तस्य यानि पञ्च हवीꣳषि समायीनि ता ऽइमाः पञ्चाङ्गुलयः कुल्फावेवैन्द्राग्नः हविस्तद्वै द्विदेवत्यम्भवति तस्मादिमौ द्वौ कुल्फाविदम्माहेन्द्रमिदं. वैश्वकर्म्मणन्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तमथ यदिदमन्तरुदरे तत्पितृयज्ञस्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ ५ ॥ अयमेवोत्तरो बाहुः शुनासीरीयम् । तस्य यानि पञ्च हवीꣳषि समायीनि ता ऽइमाः पञ्चाङ्गुलयोऽथ य ऽएष ऽउपरिष्टाद्बाहुस्तस्य सन्धिस्तच्छुनासीरीयमिदं वायव्यन्दोः सौर्य्यन्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ ६ ॥ तानि वा ऽएतानि । चातुर्म्मास्यानि † त्रिपन्वीनि ‡, द्विसमस्तानि तस्मादि-

* पर्वचतुष्टयसञ्चारीणि ।

† चतुर्षु चतुर्षु मासेषु क्रियमाणानि चातुर्मास्यानि वैश्वदेव-वरुणप्रघास साकमेध शुनासीरीयाख्यानि चत्वारि पर्वाणि ।

‡ त्रय सन्धयोऽन्तरालकालाश्चत्वारो मासा येषु तानि त्रिपन्वीनि ।

मानि पुरुषस्याङ्गानि त्रिपर्वाणि द्विसमस्तानि तेषां वै चतुर्णान्द्वयोस्त्रीणि त्रीणि हवींष्यनिरुक्तानि भवन्ति द्वे द्वे द्वयोः ॥७॥ [अर्धः प्रपाठकः ॥५६॥] तेषां वै चतुर्ष्वग्निम्मन्थन्ति। तस्माच्चतुर्भिरङ्गैरायुते द्वयोः प्रणयन्ति तस्माद्द्वाभ्यामेत्येवमु ह प्रजापतिश्चातुर्म्मास्यैरात्मानं विदधे तथो ऽएवैवंविद्यजमानश्चातुर्म्मास्यैरात्मानं विधत्ते ॥८॥ तदाहुः सर्वं गायत्रं वैश्वदेवः हविः स्यात्सर्वं त्रैष्टुभं वरुणप्रघासाः सर्वं जागतम्महाहविः सर्वानुष्टुभः शुनासीरीयश्चतुष्टोमस्याप्त्या ऽइति तदु तथा न कुर्य्याद्यत्रा ऽएतान्यभिसम्पद्यन्ते तेनैवास्य स काम ऽउपाप्तो भवति ॥ ९ ॥ तानि वा ऽएतानि । चातुर्म्मास्यानि द्वापष्टानि त्रीणि शतानि बृहत्यः सम्पद्यन्ते तदेभिः सँवत्सरश्च महाव्रतञ्चाप्नोत्यथो द्विप्रतिष्ठो वा ऽअयं यजमानो यजमानमेवैतत्स्वर्ग्गे लोक ऽआयातयति प्रतिष्ठापयति ॥ १० ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ प्रश्नप्रतिवचनैरग्निहोत्रहोमस्य सर्वदेवतृप्तिकरत्वप्रतिपादनम् ]

शौचेयो ह प्राचीनयोग्यः । उद्दालकमारुणिमाजगाम ब्रह्मोद्यमग्निहोत्रं विविदिषिष्यामीति ॥ १ ॥ स होवाच । गौतम का तेऽग्निहोत्री को वत्सः किमुपसृष्टा किः संयोजनङ्किन्दुह्यमानङ्किन्दुग्धङ्किमाह्रियमाणङ्किमधिश्रितङ्किमवज्योत्यमानङ्किमद्भिः प्रत्यानीतङ्किमुद्वास्यमानङ्किमुद्वा-

( १ ) 'ग' 'ज' पुस्तकयो. "विविदिषामीति" इति पाठो दृश्यते ।

सितङ्किमुन्नीयमानङ्किमुन्नीतङ्किमुद्यतङ्किꣳ ह्रियमाणङ्किन्त्रिगृहीतम् ॥ २ ॥ काꣳ समिधमादधासि का पूर्वाहुतिः किमुपासीपदः किमपैक्षिष्ठाः कोत्तराहुतिः ॥ ३ ॥ किꣳ हुत्वा प्राकम्पयसि । किꣳ स्रुचम्परिमृज्य कूर्चे न्यमार्क्षीः किन्द्वितीयम्परिमृज्य-दक्षिणतो हस्तमुपासीपदः किम्पूर्वम्प्राशीः किन्द्वितीयङ्किमुत्सृप्याचामीः किꣳ स्रुच्यप ऽआनीय निरौक्षीः किन्द्वितीयङ्किन्तृतीयमेतान्दिशमुदौक्षीः किञ्जघनेनाहवनीयमपो न्यनैषीः किꣳ समतिष्ठिपो यदि वां ऽएतद्विद्वानग्निहोत्रमहौषीरथ ते हुतं यद्यु वा ऽअविद्वानहुतमेव त ऽहुति ॥ ४ ॥ स होवाच । हुतैव मे मानव्याग्निहोत्री वायव्यो वत्सः सजूरुपसृष्टा विराट् संस्योजनमाश्विनन्दुह्यमानं वैश्वदेवन्दुग्धं वायव्यमाह्रियमाणमाग्नेयमधिश्रितमैन्द्राग्नमवज्योत्यमानं वारुणमद्भिः प्रत्यानीतं वायव्यमुद्रास्यमानन्द्यावापृथिव्यमुद्वासितमाश्विनमुन्नीयमानं वैश्वदेवमुन्नीतम्महादेवायोद्यतं वायव्यꣳ ह्रियमाणं वैष्णवन्त्रिगृहीतम् ॥ ५ ॥ अथ याꣳ समिधमादधामि । आहुतीनाꣳ सा प्रतिष्ठा या पूर्वाहुतिर्देवाँस्तयाप्रैषं यदुपासीपदम्पाहंस्पत्यन्तद्यदपैक्षिषीममुश्चामुश्च लोकौ तेन समिधा योत्तराहुतिर्म्मान्तया स्वर्गे लोकेऽधाम् ॥६॥ अथ यद्धुत्वा प्राकम्पयामि । वायव्यन्तद्यत्स्रुचम्परिमृज्य कूर्चे न्यमार्जिषमोषधिवनस्पतीꣳस्तेनाप्रैषं यद्द्वितीयम्परिमृज्य दक्षिणतो हस्तमुपासीपदम्पितॄꣳस्तेनाप्रैषं यत्पूर्वम्प्राशिषमात्मानन्तेनाप्रैषं यद्द्वि-

तीयम्प्रजान्तेनाथ यदुरस्तृष्णीम्पाप्मनस्तेनाप्रैषं यदुत्तमुच्चय्य पुरस्ता निर्दौक्षिपः सर्पदेवजनाँस्तेनाप्रैषं यद्द्वितीयङ्गन्धर्वाप्सरसस्तेनाथ यत्तृतीयमेतान्दिशमुदौक्षिपथं स्वर्गस्य लोकस्य तेन द्वारं व्यवारिषं यज्जघनेनाहवनीयमपो न्यनैषमस्मै लोकाय तेन वृष्टिमदां यत्समतिष्ठिपं यत्पृथिव्या ऽऊनन्तत्तेनापूपुरमित्येतन्नो भगवन्त्सहेति होवाच ॥ ७ ॥ शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छैव प्राचीनयोग्येति स होवाच यस्मिन्काल ऽउद्धृतास्तेऽग्नयः स्युरुपावहृतानि पात्राणि होष्यन्त्स्या ऽअथ त ऽआहवनीयोऽनुगच्छेद्वेत्थ तद्भयं यदुग्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्य ज्येष्ठः पुत्रो म्रियेत यस्यैतदविदितथं स्याद्विद्याभिस्त्वेवाहुमतारिषमिति किं विदितङ्का प्रायश्चित्तिरिति प्राण ऽउदानमप्यगादिति गार्हपत्य ऽआहुतिञ्जुहुयाथ सैव प्रायश्चित्तिर्न तद्गागः कुर्वीयेत्येतन्नो भगवन्त्सहेति होवाच ॥ ८ ॥ शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छैव प्राचीनयोग्येति स होवाच यत्र त ऽएतस्मिन्नेव काले गार्हपत्योऽनुगच्छेद्वेत्थ तद्भयं यदुग्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्य गृहपतिर्म्रियेत यस्यैतदविदितथं स्याद्विद्याभिस्त्वेवाहुमतारिषमिति किं विदितङ्का प्रायश्चित्तिरित्युदानः प्राणमप्यगादित्याहवनीय ऽआहुतिञ्जुहुयाथ सैव प्रायश्चित्तिर्न तद्गागः कुर्वीयेत्येतन्नो भगवन्त्सहेति होवाच ॥ ९ ॥ शौचेयो ज्ञप्तः ।

प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छेत्र प्राचीनयोग्येति स होवाच यत्र त ऽएतस्मिन्नेव कालेऽन्वाहार्यपचनोऽनुगच्छेत्रेथ तद्भयं स्यदुत्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्य सर्वे पशवो म्रियेरन्नस्यैतदविदितश्ठं स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितङ्का प्रायश्चित्तिरिति व्यान ऽउदानमप्यगादिति गार्हपत्य ऽआहुतिञ्जुहुयाठ्ठ सैव प्रायश्चित्तिर्न तदागः कुर्वीयेत्येतन्नो भगवन्तस्तहेति होवाच ॥ १० ॥ शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छैव प्राचीनयोग्येति स होवाच यत्र त ऽएतस्मिन्नेव काले सर्वेऽग्नयोऽनुगच्छेयुर्वेरथ तद्भयं स्यदुत्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्यादायादङ्कुलठ्ठं स्यायस्यैतदविदितश्ठं स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितङ्का प्रायश्चित्तिरिति पुरा चिरादग्निम्मथित्वा यान्दिशं वातो वायात्तान्दिशमाहवनीयमुद्धृत्य वायव्यामाहुतिञ्जुहुयाठ्ठं स विद्याठ्ठं समृद्धम्मेऽग्निहोत्रङ्ग सर्वदेवत्यं वायुठ्ठं ह्येव सर्वाणि भूतान्यपियन्ति वायोः पुनर्विसृज्यन्ते सैव प्रायश्चित्तिर्न तदागः कुर्वीयेत्येतन्नो भगवन्तस्तहेति होवाच ॥ ११ ॥ शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छैव प्राचीनयोग्येति स होवाच यत्र त ऽएतस्मिन्नेव काले निवाते सर्वेऽग्नयोऽनुगच्छेयुर्वेरथ तद्भयं स्यदुत्र जुह्वतो भवतीति वेदेति होवाचाप्रियमेवास्मिँल्लोके पश्येताप्रियममुष्मिन्नस्यैतदविदितश्ठं स्याद्विद्या-

भिस्त्वेवाहमतारिपमिति किं विदितङ्का प्रायश्चित्तिरिति पुरा चिरादग्निम्मथित्वा प्राञ्चमाहवनीयमुद्धृत्य जघनेनाहवनीयमुपविश्श्याहमेवैनरिपवेयह् स विद्यात्थं समृद्धम्मेऽग्निहोत्रह् सर्वदेवत्यस्त्राह्मणत्थं ह्येव सर्वाणि भूतान्यपियुन्ति ब्राह्मणात्पुनर्विसृज्यन्ते सैव प्रायश्चित्तिर्न्न तदागः कुर्वीयेत्यथ वा ऽअहमेतन्नावेदिपमिति होवाच ॥ १२ ॥ शौचेयो ज्ञप्तः । इमानि समित्काष्ठान्युपायानि भगवन्तमिति स होवाच यदेवन्नावक्ष्यो मूर्द्धा ते व्यपतिष्यदेह्युपेहीति तथेति तह् होपनिन्ये तस्मै हैतात्थं शोकतरां व्याहृतिमुवाच यत्सत्यन्तस्माद् सत्यमेव वदेत् ॥ १३ ॥

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ उपनयनधर्मनिरूपणम् ]

ब्रह्मचर्य्यमागामित्याह । ब्रह्मण ऽएवैतदात्मानन्निवेदयति ब्रह्मचार्य्यसानीत्याह ब्रह्मण ऽएवैतदात्मानम्परिददात्यथैनमाह को नामासीति प्रजापतिर्वै कः प्राजापत्यमेवैनन्तत्कृत्वोपनयते ॥ १ ॥ अथास्य हस्तङ्गृह्णाति । इन्द्रस्य ब्रह्मचार्य्यस्यग्निराचार्य्यस्तवाहमाचार्य्यस्तवासाविति द्वेते वै श्रेष्ठे वलिष्ठे देवते ऽएताभ्यामेवैनत्थं श्रेष्ठाभ्यां वलिष्ठाभ्यान्देवताभ्याम्परिददाति तथा ह्यस्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥ २ ॥ अथैनम्भूतेभ्यः परिददाति । प्रजापतये त्वा परिददामि

देवाय त्वा सवित्रे परिददामीत्येते वै श्रेष्ठे वर्षिष्ठे देवते ऽएताभ्यामेवैनथं श्रेष्ठाभ्यां वर्षिष्ठाभ्यान्देवताभ्याम्परिददाति तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥ ३ ॥ अद्भ्यस्त्वौषधीभ्यः परिददामीति । तदेनमद्भ्यश्चौषधिभ्यश्च परिददाति द्यावापृथिवीभ्यान्त्वा परिददामीति तदेनमाभ्यान्द्यावापृथिवीभ्याम्परिददाति ययोरिदꣳ सर्वमधि विश्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्या ऽइति तदेनꣳ सर्वेभ्यो भूतेभ्यः परिददात्यरिष्ट्यै तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥४॥ * ब्रह्मचार्य्यसीत्याह । ब्रह्मण ऽएवैनन्तत्परिददात्यपोऽशानेत्यमृतं वा ऽआपोऽमृतमशानेत्येवैनन्तदाह कर्म्म कुर्विति वीर्य्यं वै कर्म्म वीर्य्यं कुर्वित्येवैनन्तदाह समिधमाधेहीति समित्स्वाग्निं मनसा तेजसा ब्रह्मवर्चसेनेत्येवैनन्तदाह मा सुषुप्था ऽइति मा मृथा ऽइत्येवैनन्तदाहापोऽशानेत्यमृतं वा ऽआपोऽमृतमशानेत्येवैनन्तदाह तदेनमुभयतोऽमृतेन परिगृह्णाति तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥ ५ ॥ अथास्मै सावित्रीमन्वाह† । ताꣳ ह स्मैताम्पुरा सँवत्सरेऽन्वाहुः सँवत्सरसम्मिता वै गर्भाः प्रजायन्ते जात ऽएवास्मिꣳस्तद्वाचन्दध्म ऽइति ॥ ६ ॥ अथ षट्सु मासेषु । षड्वा ऽऋतवः सँवत्सरस्य सँवत्सरसम्मिता वै गर्भाः प्रजायन्ते जात ऽएवास्मिꣳस्तद्वा-

* अश्वघातम् ५८००।
† पा० गृ० सू० २. ३. १।

चन्दद्ध्म ऽइति ॥ ७ ॥ अथ चतुर्विंशत्यहे । चतुर्विंशतिर्वै संवत्सरस्यार्द्धमासाः संवत्सरसम्मिता वै गर्भाः प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥ ८ ॥ अथ द्वादशाहे । द्वादश वै मासा संवत्सरस्य संवत्सरसम्मिता वै गर्भाः प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥ ९ ॥ अथ षडहे । षड्वा ऽऋतवः संवत्सरस्य संवत्सरसम्मिता वै गर्भाः प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥ १० ॥ अथ त्र्यहे । त्रयो वा ऽऋतवः संवत्सरस्य संवत्सरसम्मिता वै गर्भाः प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥११॥ तदुपि श्लोकं गायन्ति । आचार्य्यो गर्भी भवति हस्तमाधाय दक्षिणन्तृतीयस्यां स जायते सावित्र्या सह ब्राह्मण ऽइति सद्यो ह त्वाव ब्राह्मणायानुब्रूयादाग्नेयो वै ब्राह्मणः सद्यो वा ऽअग्निर्जायते तस्मात्सद्य ऽएव ब्राह्मणायानुब्रूयात् ॥ १२ ॥ ताꣳ हैतामेके । सावित्रीमनुष्टुभमन्वाहुर्वाग्वा ऽअनुष्टुप्तद्स्मिन्वाचन्दद्ध्म ऽइति न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयादा न्वा ऽअयमस्य वाचमदित मूको भविष्यतीतीश्वरो ह तथैव स्यात्तस्मादेतां गायत्रीमेव सावित्रीमनुब्रूयात् ॥ १३ ॥ अथ हैके दक्षिणतः । तिष्ठते वासीनाय वान्वाहुर्न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयाद्दुल्बधन्वा ऽअयमिममजीजनत दुल्बो भविष्यतीतीश्वरो ह तथैव स्यात्तस्मात्पुरस्तादेव प्रतीचे समीक्षमाणायानुब्रूयात् ॥ १४ ॥ तां वै पच्छोऽन्वाह । त्रयो वै

प्प्राणाः प्प्राण ऽउदानो व्व्यानस्तानेवास्मिँस्तद्दधात्यथा- र्द्धचंशो द्वौ वा ऽइमौ प्प्राणौ प्प्राणोदानावेव प्प्राणोदानावे- वास्मिँस्तद्दधात्यथ कृत्स्नामेको वा ऽअयम्प्राणः कृत्स्न ऽएव प्प्राणमेवास्मिँस्तत्कृत्स्नन्दधाति ॥ १५ ॥ तदाहुः । न ब्ब्राह्मणम्ब्रह्मचर्य्यमुपनीय मिथुनञ्चरेद्गर्भो वा ऽएष भवति यो ब्ब्रह्मचर्य्यमुपैति नेदिमम्ब्राह्मणं विपिकाद्रेतसो जनपा- नीति ॥ १६ ॥ तदु वा ऽआहुः । काममेव चरेद्द्वय्यो वा ऽइमाः प्प्रजा दैव्व्यश्चैव मानुष्ष्यश्च ता वा ऽइमा मानुष्ष्यः प्प्रजाः प्प्रजननात्प्रजायन्ते च्छन्दांᳬसि वै दैव्व्यः प्प्रजास्तानि मुखतो जनयते तत ऽएतज्जनयते तस्मादु काममेव चरेत् ॥ १७ ॥ तदाहुः । न ब्ब्रह्मचारी सन्मध्वश्नीयादोषधीनां वा ऽएष परमो रसो यन्मधु नेदन्नाद्यस्यान्तङ्गच्छानीत्यथ ह स्माह श्वेतकेतुरारुणेयो ब्ब्रह्मचारी सन्मध्वश्नँस्त्रय्यै वा ऽएतद्विद्यायै शिष्टं यन्मधु स तु रसो यस्येदृक्शिष्टमिति यथा ह वा ऽऋचं वा यजुर्वा साम वाभिव्व्याहरेत्तादृक्तद्य ऽएवं विद्वान्ब्रह्मचारी सन्मध्वश्नाति तस्मादु काममेवाश्नीयात् ॥ १८ ॥

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

[ शतातिरात्राख्यसत्रविधानमाख्यायिकया ]

देवाह्वा ऽऊर्द्ध्वान्स्वर्गँल्लोकं य्यतः । असुरास्तमसा- न्तरदधुस्ते होचुर्न्न वा ऽअस्यान्न्येन सत्रादपघातोऽस्ति हन्त सत्रमासामहा ऽइति ॥ १ ॥ ते शताग्निष्टोमः

सत्रमुपेयुः । ते यावदासीनः परापश्येयुस्तावतस्तमोऽपाघ्न-
न्नेवमेव शतोक्थ्येन यावत्तिष्ठन्परापश्येयुस्तावतस्तमोऽपा-
घ्नत ॥ २ ॥ ते होचुः । अप वाव तमो हन्महे न त्वेव
सर्वमिव हन्त प्रजापतिम्पितरम्प्रत्ययामेति ते प्रजापति-
म्पितरम्प्रतीत्योचुरसुरा वै नो भगव ऽऊर्ध्वान्त्स्वर्गँल्लोकं
यतस्तमसान्तरदधुः ॥ ३ ॥ ते शताग्निष्टोमः सत्रमुपेम ।
ते यावदासीनः परापश्येत्तावतस्तमोऽपाहन्मह्येवमेव शतो-
क्थ्येन यावत्तिष्ठन्परापश्येत्तावतस्तमोऽपाहन्महि प्र
नो भगवञ्छाधि यथासुरांस्तमोऽपहत्य सर्वम्पाप्मानमप-
हत्य स्वर्गँल्लोकम्प्रज्ञास्याम ऽइति ॥ ४ ॥ स होवाच ।
असर्वक्रतुभ्यां वै यज्ञाभ्यामगन्त यदग्निष्टोमेन चो-
क्थ्येन च शतातिरात्रः सत्रमुपेत तेनासुरांस्तमोऽपहत्य
सर्वम्पाप्मानमपहत्य स्वर्गँल्लोकम्प्रज्ञास्यथेति ॥ ५ ॥ ते
शतातिरात्रः सत्रमुपेयुः । तेनासुरांस्तमोऽपहत्य सर्वम्पा-
प्मानमपहत्य स्वर्गँल्लोकम्प्रजज्ञुस्तेषामर्धमेवपश्चाद्गोप्येवाहः-
स्वहरभि रात्रिसामानि परीयू रात्रिमुभ्यहःसामानि
॥ ६ ॥ ते होचुः । असुहाम वै न प्रजानीमो हन्त
प्रजापतिमेव पितरम्प्रत्ययामेति ते प्रजापतिमेव पितर-
म्प्रतीत्योचुरहस्रो रात्रिसामानि रात्र्यामहस्रो भवन्ति नः ॥
विपश्चित्यज्ञान्मुग्धान्विद्वान्धीरोऽनुशाधि न ऽइति ॥ ७ ॥
तान्हैतदुपजगौ । महाहिमिव वै ह्रदाद्धलीयानन्त्ववेत्य ॥
अनुत्त स्वादास्थानात्ततः सत्रत्र तापत ऽइति ॥ ८ ॥
आश्विनं वै वः शस्यमानम् । प्रातरनुवाकमास्थानादनुत्त

यमास्थानादुदुद्धन्धीराः सन्तो ऽअधीरवत् ॥ प्रशास्त्रा तमुपेत शनैरप्रतिशङ्सतेति ॥ ९ ॥ ते होचुः । कथन्नु भगवः शस्तङ्कथमप्रतिशस्तमिति स होवाच यत्र होताश्विनः शङ्सन्नाग्नेयस्य कृतोर्गायत्रस्य च्छन्दसः पारङ्गच्छात्तःप्रतिप्रस्थाता वसतीवरीः परिहृत्य मैत्रावरुणस्य हविर्द्धानयोः प्प्रातरनुवाकमुपाकुरुतादुच्चैर्होता शङ्सति शनैरितरो जञ्जप्यमान ऽइवान्वाह तन्न वाचा वाचम्प्रत्येति न च्छन्दसा छन्दः ॥ १० ॥ परिहिते प्प्रातरनुवाके । यथायतनमेवोपाꣳश्वन्तर्यामौ हुत्वा द्रोणकलशे पवित्रम्प्रपीड्य निदधाति तिरोह्नयैश्चरित्त्वा प्प्रत्यञ्चः प्प्रतिपरेत्त्य तिरोह्न्यानेव भक्षयाद्धा ऽअथानुपूर्वं ग्यज्ञपुच्छꣳ सꣳस्थाप्य य ऽऊद्धा ऽअन्तर्यामाद्ग्रहास्तान्ग्गृहीत्वा विप्प्रुषाꣳ होमꣳ हुत्वा सन्तनिञ्च वहिष्पवमानेन स्तुत्वा हरेव प्प्रतिपद्याद्धा ऽइति ॥ ११ ॥ तदेतेऽभि श्लोकाः । चतुर्भिः सैन्धवैर्युक्तेर्द्धीरा व्व्यजहुस्तमः ॥ विद्वाꣳसो ये शतक्रतुदेवाः सत्रमतन्वतेति ॥ १२ ॥ चत्वारो ह्यत्र युक्ता भवन्ति । द्वौ होतारौ द्वावध्वर्यू पवेन्तु शक्त्वेव हनूनि कल्प्पयन्नहन्नोरन्तौ व्व्यतिपजन्त धीराः ॥ न दानवा यज्ञियन्तन्तुमेषां विजानीमो विततम्मोहयन्ति नः ॥ पूर्वस्याह्नः परिशिꣳषन्ति कर्म्म तदुत्तरेणाभिवितस्वतेऽह्ना ॥ दुर्विज्ञान-

(१) "अनन्तर्गर्भिणं साग्रं यौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्" ॥ (कर्मप्र०)
"कुशौ समानप्रशीर्षावनन्तर्गर्भौ" ( का० श्रौ० सू० २. ३. ३० )

(२) अभिषवे ग्रहणे [illegible] पतितानां सोमबिन्दूनां ग्रहणाशक्यत्वात् तत्प्रत्यवायपरिहाराय कृतहोमस्य विप्रुड्ढोम इति संज्ञा ।

ङ्काङ्क्ष्यन्देवतानाथं सोमाः सोमैर्ऌयतिपक्काः प्लवन्ते ॥ समानान्सदसुक्षन्ति हयान्काष्ठभृतो यथा ॥ पूर्णान्परिस्रुतः कुम्भाञ्जनमेजयसादन ऽइत्यसुररक्षसान्यपेयुः ॥१३॥

पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

[ पञ्चमहायज्ञानां महासत्रत्वप्रतिपादनम् ]

पञ्चैव महायज्ञाः *। तान्येव महासत्राणि भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ ऽइति ॥ १ ॥ अहरहर्भूतेभ्यो बलिं हरेत्। तथैतम्भूतयज्ञः समाप्नोत्यहरहर्दद्यादोदपात्रात्तथैतम्मनुष्ययज्ञः समाप्नोत्यहरहः स्वधाकुर्यादोदपात्रात्तथैतम्पितृयज्ञः समाप्नोत्यहरहः † स्वाहाकुर्यादाकाष्ठात्तथैतन्देवयज्ञः समाप्नोति ॥२॥ अथ ब्रह्मयज्ञः। स्वाध्यायो वै ब्रह्मयज्ञस्तस्य वा ऽएतस्य ब्रह्मयज्ञस्य वागेव जुहूर्मन ऽउपभृच्चक्षुर्ध्रुवा मेधा स्रुवः सत्यमवभृथः स्वर्गो लोक ऽउदयनं यावन्तः ह वा ऽइमाम्पृथिवीं वित्तेन पूर्णान्ददँल्लोकञ्जयति त्रिस्तावन्तञ्जयति भूयाथंसञ्चाक्षय्यं य ऽएवं विद्वानहरहः स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्येतव्यः ॥ ३ ॥ पय ऽआहुतयो ह वा ऽएता देवानाम्। यदृचः स य ऽएवं विद्वानृचोऽहरहः स्वाध्यायमधीते पय ऽआहुतिभिरेव तद्देवाँस्तर्पयति त

* "अथातः पञ्च महायज्ञा" पा० गृ० सू० का० २ क० ९ सू० १।

† "अहरहः स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठाद्देवेभ्यः पितृभ्यो मनुष्येभ्यश्चोदपात्रात्" पा० गृ० सू० २. ९. १६।

ऽएनन्तृप्तास्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वा-
त्मना सर्व्वाभिः पुण्ण्याभिः सम्पद्भिर्घृतकुल्ल्या मधु-
कुल्ल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ४ ॥ आज्याहुतयो
ह वा ऽएता देवानाम् । यद्यजूꣳषि स य ऽएवं विद्वा-
न्यजूꣳष्यहरहः स्वाध्यायमधीत ऽआज्याहुतिभिरेव
तद्देवाँस्तर्प्पयति त ऽएनन्तृप्तास्तर्प्पयन्ति योगक्षेमेण
प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्ण्याभिः सम्पद्भि-
र्घृतकुल्ल्या मधुकुल्ल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ५ ॥
सोमाहुतयो ह वा ऽएता देवानाम् । यत्सामानि स य
ऽएवं विद्वान्त्सामान्यहरहः स्वाध्यायमधीते सोमाहुति-
भिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्तास्तर्प्पयन्ति योग-
क्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्ण्याभिः
सम्पद्भिर्घृतकुल्ल्या मधुकुल्ल्याः पितॄन्त्स्वधा ऽअभिवहन्ति
॥ ६ ॥ मेद ऽआहुतयो ह वा ऽएता देवानाम् । यदथर्वा-
ङ्गिरसः स य ऽएवं विद्वानथर्वाङ्गिरसोऽहरहः स्वाध्याय-
मधीते मेद ऽआहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्ता-
स्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः
पुण्ण्याभिः सम्पद्भिर्घृतकुल्ल्या मधुकुल्ल्याः पितॄन्त्स्वधा
ऽअभिवहन्ति ॥७॥ मध्वाहुतयो ह वा ऽएता देवानाम् । यद-
नुशासनानि * विद्या † वाकोवाक्क्यमितिहासपुराणङ्गाथा

---

* अनुशिष्यन्ते—व्युत्पाद्यन्ते एभिरित्यनुशासनानि व्याकरणनिरुक्तादीनि षडङ्गानि ।

† न्यायमीमांसाद्याः ।

( १ ) उक्तिप्रत्युक्तिरूपं प्रकरणं वाकोवाक्यम् ।

नाराशꣳस्यः स य ऽएवं विद्वाननुशासनानि विद्या वाकोवा-क्यमितिहासपुराणङ्गाथा नाराशꣳसीरित्यहरहः स्वाध्यायम-धीते मद्ध्वाहुतिभिरेव तद्देवाꣳस्तर्प्पयति त ऽएनन्तृप्तास्तर्प्पय-न्ति योगक्षेमेण प्प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्स्स्वधा ऽअभिवहन्ति ॥ ८ ॥ तस्य वा ऽएतस्य ब्रह्मयज्ञस्य । चत्वारो वषट्कारा यद्वातो वाति यद्विद्द्योतते यत्स्तनयति यदवस्फूर्ज्जति तस्मा-देवंविद्वाते वाति विद्द्योतमाने स्तनयत्यवस्फूर्ज्जत्यधीयीतैव वषट्काराणामच्छम्बट्कारायाति ह वै पुनर्म्मृत्युम्मुच्यते गच्छति ब्रह्मणः सात्मताꣳ स चेदपि प्प्रबलमिव न शक्नुयादप्प्येकन्देवपदमधीयीतैव तथा भूतेभ्यो न हीयते ॥ ९ ॥

पञ्चमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठक ॥ ३ ॥
कण्डिकासंख्या ॥ ११२ ॥

---

[ स्वाध्यायप्रशंसा ]

अथातः स्वाद्ध्यायप्प्रशꣳसा । प्प्रिये स्वाद्ध्यायप्प्रव-चने भवतो युक्तमना भवत्यपराधीनोऽहरहरर्त्थान्त्साधयते सुखꣳ स्वपिति परमचिकित्सक ऽआत्मनो भवतीन्द्रिय-संय्यमश्चैकारामता च प्प्रज्ञावृद्धिर्य्यशो लोकपक्तिः प्प्रज्ञा वर्द्धमाना चतुरो धर्म्मान्ब्राह्मणमभिनिष्प्पादयति ब्राह्म-ण्यम्प्रतिरूपचर्य्यां य्यशो लोकपक्तिꣳल्लोकः पच्यमान-

श्चतुर्भिर्द्धर्म्मैर्ब्राह्मणम्भुनक्त्यर्च्चया च दानेन चाज्येयतया चावध्यतया च ॥ १ ॥ ये ह वै के च श्रमाः । इमे द्यावापृथिवी ऽअन्तरेण स्वाध्यायो हैव तेषाम्परमता काष्ठा य ऽएवं विद्वान्त्स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्येतव्यः ॥ २ ॥ यद्यद्ध वा ऽअयञ्छन्दसः । स्वाध्यायमधीते तेन तेन हैवास्य यज्ञक्रतुनेष्टम्भवति य ऽएवं विद्वान्त्स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्येतव्यः ॥ ३ ॥ यदि ह वा अप्यभ्यक्तः । अलङ्कृतः सुहितः सुखे शयने शयानः स्वाध्यायमधीत ऽआ हैव स नखाग्रेभ्यस्तप्यते य ऽएवं विद्वान्त्स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्येतव्यः ॥ ४ ॥ मधु ह वा ऽऋचः । घृतꣳ ह सामान्यमृतं यजूꣳषि यद्ध वा ऽअयं वाकोवाक्यमधीते क्षीरौदनमाꣳसौदनौ हैव तौ ॥ ५ ॥ मधुना ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वानृचोऽहरहः स्वाध्यायमधीते त ऽएनन्तृप्तास्तर्प्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥ ६ ॥ घृतेन ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वान्त्सामान्यहरहः स्वाध्यायमधीते त ऽएनन्तृप्तास्तर्प्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥ ७ ॥ अमृतेन ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वान्यजूꣳष्यहरहः स्वाध्यायमधीते त ऽएनन्तृप्तास्तर्प्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥८॥ क्षीरौदनमाꣳसौदनाभ्याꣳ ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वान्वाकोवाक्यमितिहासपुराणमित्यहरहः स्वाध्यायमधीते त ऽएनन्तृप्तास्तर्प्पयन्ति सर्वैः कामैः सर्वै-

रभोगैः ॥ ९ ॥ यन्ति वा ऽआपः । एत्यादित्य ऽएति चन्द्रमा यन्ति नक्षत्राणि यथा ह वा ऽएता देवता नेयुर्न कुर्य्युरेवꣳ हैव तदहर्ब्राह्मणो भवति यदहः स्वाध्यायन्नाधीते तस्मात्स्वाध्यायोऽध्येतव्यस्तस्मादप्यृचं वा यजुर्वा साम वा गाथां वा कुंव्यां वाभिव्याहरेद्व्रतस्याव्यवच्छेदाय ॥ १० ॥

पञ्चमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥



[ आख्यायिकया व्याहृत्युत्पत्तिकथनम् ]

प्रजापतिर्वा ऽइदमग्र ऽआसीत् । एक ऽएव सोऽकामयत स्याम्प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्माच्छ्रान्तात्तेपानात्त्रयो लोका ऽअसृज्यन्त पृथिव्यन्तरिक्षन्द्यौः ॥ १ ॥ स ऽइमाँस्त्रीँल्लोकानभितताप । तेभ्यस्तप्तेभ्यस्त्रीणि ज्योतीꣳष्यजायन्ताग्निर्योऽयम्पवते सूर्य्यः ॥ २ ॥ स ऽइमानि त्रीणि ज्योतीꣳष्यभितताप । तेभ्यस्तप्तेभ्यस्त्रयो वेदा ऽअजायन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेदः सूर्य्यात्सामवेदः ॥ ३ ॥ स इमाँस्त्रीन्वेदानभितताप । तेभ्यस्तप्तेभ्यस्त्रीणि शुक्राण्यजायन्त भूरित्यृग्वेदाद्भुव ऽइति यजुर्वेदात्स्वरिति सामवेदात्तदृग्वेदेनैव होत्रमकुर्वत यजुर्वेदेनाध्वर्य्यवꣳ सामवेदेनोद्गीथं यदेव त्रय्यै विद्यायै शुक्रन्तेन ब्रह्मत्वमथोच्चक्राम ॥ ४ ॥ ते देवाः प्रजापतिमब्रुवन् । यदि न ऋक्तो वा यजुष्टो वा सामतो वा यज्ञो ह्वलेत्केनैनम्भिषज्येमेति ॥ ५ ॥ स होवाच ।

यद्यृक्तो भूरिति चतुर्गृहीतमाज्यङ्गृहीत्वा गार्हपत्ये जुहवथ यदि यजुष्टो भुव ऽइति चतुर्गृहीतमाज्यङ्गृहीत्वाग्नीध्रीये जुहवथान्वाहार्यपचने† वा हविर्यज्ञे यदि सामतः स्वरिति चतुर्गृहीतमाज्यङ्गृहीत्वाहवनीये जुहवथ यद्यु ऽअविज्ञातमसत्सर्वाण्यनुद्रुत्याहवनीये जुहवथ तदृग्वेदेनैवऽर्ग्वेदम्भिषज्यति यजुर्वेदेन यजुर्वेदꣳ सामवेदेन सामवेदꣳ स यथा पर्वणा पर्व सन्दध्यादेवꣳ हैव स सन्दधाति य ऽएताभिर्भिषज्यत्यथ यो ह्यतोऽन्येन भिषज्यति यथा शीर्णेन शीर्णꣳ सन्धित्सेद्यथा वा शीर्णे गरमभिनिदध्यादेवन्तत्तस्मादेवंविदमेव ब्रह्माणङ्कुर्वीत नानेवंविदम् ॥ ६ ॥ तदाहुः । यदृचा होत्रङ्क्रियते यजुषाध्वर्यवꣳ साम्नोद्गीथोऽथ केन ब्रह्मत्वमित्यनया त्रय्या विद्ययेति ह ब्रूयात् ॥ ७ ॥

पञ्चमाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥

[ अंश्वदाभ्ययोर्ग्रहयोरात्मवागादिरूपतया समुचितयानुष्ठानम् ]

प्रजापतिर्ह वा ऽएष यदꣳशुः । सोऽस्यैष ऽआत्मैवात्मा ह्ययम्प्रजापतिर्वागेवादाभ्यः स यदꣳशुङ्गृहीत्वादाभ्यङ्गृह्णात्यात्मानमेवास्यैतत्संस्कृत्य तस्मिन्नेतां वाचम्प्रतिष्ठापयति ॥ १ ॥ अथ मनो ह वा ऽअꣳशुः । वागदाभ्यः प्राण ऽएवाꣳशुरुदानोऽदाभ्यश्चक्षुरेवाꣳशुः श्रोत्रमदा-

† अन्वाहार्यपचने—दक्षिणाग्नौ ।

ऽभ्यस्तद्यदेतौ ग्रहौ गृह्णन्ति सर्वत्वायैव कृत्स्नतायै ॥ २ ॥
अथ देवाश्च ह वा ऽअसुराश्च । उभये प्राजापत्या
ऽअस्पर्द्धन्त त ऽएतस्मिन्नेव यज्ञे प्रजापतावस्पर्द्धन्ता-
स्माकमयꣳ स्यादस्माकमयꣳ स्यादिति ॥ ३ ॥ ततो
देवाः । अर्चन्तः श्राम्यन्तश्चेरुस्त ऽएतन्नहन्ददृशुरेत-
मदाभ्यन्तमगृह्णत ते सवनानि प्रावृहन्त ते सर्वं यज्ञꣳ
समवृञ्जतान्तरायन्नसुरान्यज्ञात् ॥ ४ ॥ ते होचुः । अदभाम
वा ऽएनानिति तस्मादुदाभ्यो न वै नोऽदभन्निति तस्मा-
दुदाभ्यो वाग्वा ऽअदाभ्यः सेयमदब्धा वाक्तस्मा-
द्देवादाभ्य ऽएव ह वै द्विषतो भ्रातृव्यस्य सर्वं
यज्ञꣳ संवृङ्क्त ऽएवन्द्विषन्तम्भ्रातृव्यꣳ सर्वस्माद्यज्ञा-
न्निर्भजति बहिर्द्धा करोति य ऽउ ऽएवमेतद्वेद ॥ ५ ॥ स
येनैव पात्रेणाꣳशुं गृह्णाति । तस्मिन्नेव पात्रे निग्राभ्या-
भ्योऽप ऽआनीय तस्मिन्नेतानꣳशून्गृह्णाति A ॥६॥ 'उपयाम-
गृहीतोऽसि । अग्नये त्वा गायत्रच्छन्दसङ्गृह्णामी'ति गायत्र-
म्प्रातःसवनन्तत्प्रातःसवनम्प्रवृहन्ती'न्द्राय त्वा त्रिष्टुप्छन्द-
सङ्गृह्णामी'ति त्रैष्टुभम्माध्यन्दिनꣳ सवनन्तन्माध्यन्दिनꣳ
सवनम्प्रवृहति 'विश्वेभ्यस्त्वा देवेभ्यो जगच्छन्दसङ्गृ-
ह्णामी'ति जागतन्तृतीयसवनन्तत्तृतीयसवनम्प्रवृहत्य'नुष्टु-
प्तेऽभिगर' ऽइति यद्वा ऽऊर्ध्वꣳ सवनेभ्यस्तदानुष्टुभन्त-

(१) अभिषोतव्यस्य सोमस्य सेचनीया आपो निग्राभ्या उच्यन्ते ।

(A) का० श्रौ० सू० अ० ११ क० ५ सू० १६ ।

(२) शु० य० वे० सं० अ० ८ क० ४७ । (३) शु० य० वे० सं० अ० ८ क० ४७ ।
(४) शु० य० वे० सं० अ० ८ क० ४७ । (५) शु० य० वे० सं० अ० ८ क० ४७ ।

देवैतत्प्रवृहति तन्नाभिषुणोति वज्रो वै ग्रावा वागदाभ्यो नेद्वज्रेण वाचं हिनसानीति ॥ ७ ॥ अथांशूनेवाधूनोति[B] । ‘श्वात्रीणान्त्वा पत्मन्नाधूनोमि कुकूननानान्त्वा पत्मन्नाधूनोमि भन्दनानान्त्वा पत्मन्नाधूनोमि मदिन्तमानान्त्वा पत्मन्नाधूनोमि मधुन्तमानान्त्वा पत्मन्नाधूनोमी’त्येता वै दैवीरापस्तद्याश्चैव दैवीरापो याश्चेमा मानुष्यस्ताभिरेवास्मिन्नेतदुभयीभी रसन्दधाति ॥ ८ ॥ ‘शुक्रन्त्वा[2] शुक्र ऽआधूनोमी’ति । शुक्रं ह्येतच्छुक्र ऽआधूनो‘त्यह्नो रूपे सूर्यस्य रश्मिष्वि’ति तदुहश्चैवैनमेतद्रूपे सूर्यस्य च रश्मिष्वाधूनोति ॥ ९ ॥ ‘ककुभं रूपं वृषभस्य रोचते बृहदि’ति । एतद्वै ककुभं रूपं वृषभस्य रोचते बृहद्य ऽएष तपति ‘शुक्रः शुक्रस्य पुरोगाः सोमः सोमस्य पुरोगा’ ऽइति तच्छुक्रमेवैतच्छुक्रस्य पुरोगाङ्करोति सोमः सोमस्य पुरोगां ‘यत्ते सोमादाभ्यन्नाम जागृवि तस्मै त्वा गृह्णामी’त्येतद्ध वा ऽअस्यादाभ्यन्नाम जागृवि यद्वाकद्वाचमेवैतद्वाचे गृह्णाति ॥ १० ॥ अथोपनिष्क्रम्य जुहोति* । ‘तस्मै ते सोम सोमाय स्वाहे’ति तत्सोममेवैतत्सोमाय जुहोति तथो वाचमग्नौ न प्रवृणक्त्यथ हिरण्यमभिव्यनित्य-

(B) का० श्रौ० सू० १२. ५. १९ ।
(१) शु० य० वे० स० अ० ८ क० ४८ । (२) शु० य० वे० स० अ० ८ क० ४८ ।
(३) शु० य० वे० स० अ० ८ क० ४८ । (४) शु० य० वे० स० अ० ८ क० ४९ ।
(५) शु० य० वे० स० अ० ८ क० ४९ । (६) शु० य० वे० स० अ० ८ क० ४९ ।
* “तस्मै त इति जुहोति” का० श्रौ० सू० १२ ५. २ ।
(७) शु० य० वे० स० अ० ८ क० ४९ ।

सावेव बन्धुस्तस्य तावतीरेव दक्षिणा यावतीरश्शोः * ॥ ११ ॥ अथाꣳशून्पुनरप्यर्जति † । 'उशिक्त्वन्देव सोमाग्नेः प्रियम्पाथोऽपीहि वशी त्वन्देव सोमेन्द्रस्य प्रियम्पाथोऽपीह्यस्मत्सखा त्वन्देव सोम विश्वेषान्देवानाम्प्रियम्पाथोऽपीही'ति सवनानि वा ऽअदः प्रवृहति तान्येवैतत्पुनराप्याययत्ययातयामानि करोति तैरयातयामैर्यज्ञन्तन्वते ॥ १२ ॥

पञ्चमाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥



[ आख्यायिकया समिदाधानादीनां वनस्पत्यादिरूपफलप्राप्तिसाधनताकथनम् ]

भृगुर्ह वै वारुणिः । वरुणम्पितरं विद्ययातिमेने तद्ध वरुणो विदाञ्चकारातिवै मा विद्यया मन्यत ऽइति ॥ १ ॥ स होवाच । प्राङ् पुत्रक व्रजतात्तत्र यत्पश्यस्तद्दृष्ट्वा दक्षिणा व्रजतात्तत्र यत्पश्यस्तद्दृष्ट्वा प्रत्यग्व्रजतात्तत्र यत्पश्यस्तद्दृष्ट्वोदग्व्रजतात्तत्र यत्पश्यस्तद्दृष्ट्वैतयोः पूर्वयोरुत्तरमन्ववान्तरदेशं व्रजतात्तत्र यत्पश्यस्तन्म ऽआचक्षीथा ऽइति ॥ २ ॥ स ह तत ऽएव प्राङ् प्रवव्राज । इदु पुरुषैः पुरुषान्पर्वाण्येपाम्पर्वशः संव्रश्चम्पर्वशो विभजमानानिदन्त्वेदम्म-

* 'अदुत्तमदक्षिणा' का० श्रौ० सू० १२ ५ २२ ।

† का० श्रौ० सू० १२ ५ २१ ।

( १ ) शु० य० वे० सं० अ० ८ कं० ५० ।

मेति स होवाच भीष्ममस्वत भोः पुरुषान्वा ऽएतत्पुरुषाः पूर्वापण्येषाम्पर्वशः संव्रश्चम्पर्वशो व्यभक्षतेति ते होचुरित्थं वा ऽइमेऽस्मानमुष्मिँल्लोकेऽसचन्त तान्वयमिदमिह प्रतिसचामहा ऽइति स होवाचास्तीह प्रायश्चित्तीऽरित्यस्तीति क्वाति पिता ते वेदेति ॥ ३ ॥ स ह तत ऽएव दक्षिणा प्रवव्राज । इदु पुरुषैः पुरुषान्पर्वापण्येषाम्पर्वशः सङ्कर्त्तम्पर्वशो विभजमानानिदन्तवेदम्मेति स होवाच भीष्ममस्वत भोः पुरुषान्वा ऽएतत्पुरुषाः पूर्वापण्येषाम्पर्वशः सङ्कर्त्तम्पर्वशो व्यभक्षतेति ते होचुरित्थं वा ऽइमेऽस्मानमुष्मिँल्लोकेऽसचन्त तान्वयमिदमिह प्रतिसचामहा ऽइति स होवाचास्तीह प्रायश्चित्तीऽरित्यस्तीति क्वाति पितैव ते वेदेति ॥ ४ ॥ स ह तत ऽएव प्रत्यङ् प्रवव्राज । इदु पुरुषैः पुरुषाँस्तूष्णीमासीनाँस्तूष्णीमासीनैरद्यमानान्त्स होवाच भीष्ममस्वत भोः पुरुषान्वा ऽएतत्पुरुषास्तूष्णीमासीनाँस्तूष्णीमासीना ऽअदन्तीति ते होचुरित्थं वा ऽइमेऽस्मानमुष्मिँल्लोकेऽसचन्त तान्वयमिदमिह प्रतिसचामहा ऽइति स होवाचास्तीह प्रायश्चित्तीऽरित्यस्तीति क्वाति पितैव ते वेदेति ॥ ५ ॥ स ह तत ऽएवोदङ् प्रवव्राज । इदु पुरुषैः पुरुषानाक्रन्दयत ऽआक्रन्दयद्भिरद्यमानान्त्स होवाच भीष्ममस्वत भोः पुरुषान्वा ऽएतत्पुरुषा ऽआक्रन्दयत ऽआक्रन्दयन्तोऽदन्तीति ते होचुरित्थं वा ऽइमेऽस्मानमु-

( १ ) 'ग' 'ज' पुस्तकयोः 'इदु' इति पाठ उपलभ्यते ।

